# व्याकरणमहाभाष्य खण्ड 27

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१/१२२) अनभिहिते इति उच्यते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२/१२२) किम् इदम् अनभिहितम् नाम ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३/१२२) उक्तम् निर्दिष्टम् अभिहितम् इति अनर्थान्तरम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४/१२२) यावत् ब्रूयात् अनुक्ते अनिर्दिष्टे इति तावत् अनभिहिते इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५/१२२) अनभिहितवचनम् अनर्थकम् अन्यत्र अपि विहितस्य अभावात् अभिहिते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६/१२२) अनभिहितवचनम् अनर्थकम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७/१२२) किम् कारणम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८/१२२) अन्यत्र अपि विहितस्य अभावात् अभिहिते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९/१२२) अन्यत्र अपि अभिहिते विहितम् न भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०/१२२) क्व अन्यत्र ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११/१२२) चित्रगुः शबलगुः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१२/१२२) बहुव्रीहिणा उक्तत्वात् मत्वर्थस्य मत्वर्थीयः न भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१३/१२२) गर्गाः वत्साः विदाः उर्वाः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१४/१२२) यञञ्भ्याम् उक्तत्वात् अपत्यार्थस्य न्याय्योत्पत्तिः न भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१५/१२२) सप्तपर्णः अष्टापदमिति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१६/१२२) समासेन उक्तत्वात् वीप्सायाः द्विर्वचनम् न भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१७/१२२) यत् तावत् उच्यते चित्रगुः शबल्गुः बहुव्रीहिणा उक्तत्वात् मत्वर्थस्य मत्वर्थीयः न भवति इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१८/१२२) अस्तिना सामानाधिकरण्ये मतुप् विधीयते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१९/१२२) न च अत्र अस्तिना सामानाधिकरण्यम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२०/१२२) यत् अपि उच्यते गर्गाः वत्साः विदाः उर्वाः यञञ्भ्याम् उक्तत्वात् अपत्यार्थस्य न्याय्योत्पत्तिः न भवति इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२१/१२२) समर्थानाम् प्रथमात् वा इति वर्तते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२२/१२२) न च एतत् समर्थानाम् प्रथमम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२३/१२२) किं तर्हि ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२४/१२२) द्वितीयम् अर्थमुपसंक्रान्तम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२५/१२२) यत् अपि उच्यते सप्तपर्णः अष्टापदम् इति समासेन उक्तत्वात् वीप्सायाः द्विर्वचनम् न भवति इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२६/१२२) यत् अत्र वीप्सायुक्तम् न अदः प्रयुज्यते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२७/१२२) किम् पुनः तत् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२८/१२२) पर्वणि पर्वणि सप्त पर्णानि अस्य ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-२९/१२२) पङ्क्तौ पङ्क्तौ अष्टौ पदानि इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३०/१२२) श्नम्बहुजकक्षु तर्हि ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३१/१२२) श्नम्  भिनत्ति छिनत्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३२/१२२) श्नमा उक्तत्वात् कर्तृत्वस्य कर्तरि शप् न भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३३/१२२) बहुच्  बहुकृतम् , बहुभिन्नम् इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३४/१२२) बहुचा उक्तत्वात् ईषदस्माप्तेः कल्पबादयः न भवन्ति इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३५/१२२) अकच्  उच्चकैः , नीचकैः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३६/१२२) अकचा उक्तत्वात् कुत्सादीनाम् कादयः न भवन्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३७/१२२) ननु च श्नम्बहुजकचः अपवादाः ते अपवादत्वात् बाधकाः भविष्यन्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३८/१२२) श्नम्बहुजकक्षु नानादेशत्वात् उत्सर्गाप्रतिषेधः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-३९/१२२) समानदेशैः अपवादैः उत्सर्गाणाम् बाधनम् भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४०/१२२) नानादेशत्वात् न प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४१/१२२) किम् पुनः इह अकर्तव्यः अनभिहिताधिकारः क्रियते आहोस्वित् अन्यत्र कर्तव्यः न क्रियते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४२/१२२) इह अकर्तव्यः क्रियते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४३/१२२) एषः एव हि न्याय्यः पक्षः यत् अभिहिते विहितम् न

स्यात् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४४/१२२) अनभितः तु विभक्त्यर्थः तस्मात् अनभिहितवचनम् । अनभिहितः तु विभक्त्यर्थः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४५/१२२) कः पुनः विभक्त्यर्थः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४६/१२२) एकत्वादयः विभक्त्यर्थाः तेषु अनभिहितेषु कर्मादयः भिहिताः विभक्तीनाम् उत्पत्तौ निमित्तत्वाय मा भूवन् इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४७/१२२) तस्मात् अनभिहितवचनम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४८/१२२) तस्मात् अनभिहिताधिकारः क्रियते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-४९/१२२) अवश्यम् च एतत् एवम् विज्ञेयम् एकत्वादयः विभक्त्यर्थाः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५०/१२२) अभिहिते प्रथमाभावः । यः हि मन्यते कर्मादयः विभक्त्यर्थाः तेषु अभिहितेषु सामर्थ्यात् मे विभक्तीनाम् उत्पत्तिः न भविष्यति इति प्रथमा तस्य न प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५१/१२२) क्व ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५२/१२२) वृक्षः प्लक्षः ।किं कारणम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५३/१२२) प्रातिपदिकेन उक्तः प्रातिपदिकार्थः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५४/१२२) न क्व चित् प्रातिपदिकेन अनुक्तः प्रातिपदिकार्थः उच्यते च प्रथमा ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५५/१२२) सा वचनात् भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५६/१२२) तव एव तु खलु एषः दोषः यस्य ते एकत्वादयः विभक्त्यर्थाः अभिहिते प्रथमाभावः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५७/१२२) प्रथमा ते न प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५८/१२२) क्व ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-५९/१२२) पचति ओदनम् देवदत्तः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६०/१२२) किम् कारणम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६१/१२२) तिङा उक्ताः एकत्वादयः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६२/१२२) अनभिहिताधिकारम् च त्वम् करोषि परिगणनम् च ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६३/१२२) न क्व चित् तिङा एकत्वादीनाम् अनभिधानम् उच्यते च प्रथमा ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६४/१२२) सा वचनात् भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६५/१२२) ननु च इह अनभिधानम् वृक्षः प्लक्षः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६६/१२२) अत्र अपि अभिधानम् अस्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६७/१२२) कथम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६८/१२२) वक्ष्यति एतत्_ अस्तिः भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानः अपि अस्ति इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-६९/१२२) वृक्षः प्लक्षः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७०/१२२) अस्ति इति गम्यते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७१/१२२) तव एव तु खलु एषः दोषः यस्य ते कर्मादयः विभक्त्यार्थाः अभिहिते प्रथमाभावः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७२/१२२) प्रथमा ते प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७३/१२२) क्व ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७४/१२२) कटम् करोति भीष्मम् उदारम् शोभनम् दर्शनीयम् इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७५/१२२) कटशब्दात् उत्पद्यमानया द्वितीयया अभिहितम् कर्म इति कृत्वा भीषादिभ्यः द्वितीया न प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७६/१२२) का तर्हि प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७७/१२२) प्रथमा ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७८/१२२) तत् यथा ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-७९/१२२) कृतः कटः भीष्मः उदारः शोभनः दर्शनीयः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८०/१२२) करोतेः उत्पद्यमानेन क्तेन अभिहितम् कर्म इति कृत्वा भीष्मादिभ्यः द्वितीया न भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८१/१२२) का तर्हि ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८२/१२२) प्रथमा भवति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८३/१२२) न एषः दोषः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८४/१२२) न हि मम अनभिहिताधिकारः अस्ति न अपि परिगणनम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८५/१२२) सामर्थ्यात् मे विभक्तीनाम् उत्पत्तिः भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८६/१२२) अस्ति च सामर्थ्यम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८७/१२२) किम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८८/१२२) कर्मविशेषः वक्तव्यः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-८९/१२२) अथ वा कटः अपि कर्म भीष्मादयः अपि ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९०/१२२) तत्र कर्मणि इति एव सिद्धम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९१/१२२) अथ वा कटः एव कर्म तत् सामानाधिकरण्यात् भीष्मादिभ्यः द्वितीया भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९२/१२२) अस्ति खल्वपि विशेषः कटं करोति भीष्ममुदारम् शोभनम् दर्शनीयम् इति च कृतः कटो भीष्मः उदारः शोभनः दर्शनीयः इति च ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९३/१२२) करोतेः उत्पद्यमानः क्तः अनवयवेन सर्वम् कर्म अभिधत्ते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९४/१२२) कटशब्दात् पुनः उत्पद्यमानया द्वितीयया यत् कटस्थम् कर्म तत् शक्यमभिधातुम् न हि कर्मविशेषः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९५/१२२) तव एव तु खलु एषः दोषः यस्य ते एकत्वादयः विभक्त्यर्थाः अभिहिते प्रथमाभावः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९६/१२२) प्रथमा ते न प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९७/१२२) क्व ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९८/१२२) एकः द्वौ बहवः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-९९/१२२) किम् कारणम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१००/१२२) प्रातिपदिकेन उक्ताः एकत्वादयः इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०१/१२२) कर्मादिषु अपि वै विभक्त्यर्थेषु अवश्यम् एकत्वादयः निमित्तत्वेन उपादेयाः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०२/१२२) कर्मणः एवत्वे कर्मणः द्वित्वे कर्मणः बहुत्वे इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०३/१२२) न च एकत्वादीनाम् एकत्वादयः सन्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०४/१२२) अथ सन्ति मम अपि सन्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०५/१२२) तेषु अनभिहितेषु प्रथमा भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०६/१२२) अथ वा उभयवचनाः ह्येते ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०७/१२२) द्रव्यम् च आहुः गुणम् च ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०८/१२२) यत्स्थः असौ गुणः तस्य अनुक्ताः एकत्वादयः इति कृत्वा प्रथमा भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१०९/१२२) अथ वा सङ्ख्या नाम इयम् परप्रधाना ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११०/१२२) संख्येयम् अनया विशेष्यम् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१११/१२२) यदि च अत्र प्रथमा न स्यात् सङ्ख्येयम् अविशेषितम् स्यात् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११२/१२२) अथ वा वक्ष्यति तत्र वचनग्रहणस्य प्रयोजनम् उक्तेषु अपि एकत्वादिषु प्रथमा यथा स्यात् इति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११३/१२२) अथ वा समयात् भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११४/१२२) यदि सामयकी न नियोगतः अन्याः कस्मात् न भवन्ति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११५/१२२) कर्मादीनाम् अभावात् ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११६/१२२) षष्ठी तर्हि प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११७/१२२) शेषलक्षणा षष्ठी अशेषत्वात् न भविष्यति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११८/१२२) एवम् अपि व्यतिकरः प्राप्नोति ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-११९/१२२) एकस्मिन् अपि द्विवचनबहुवचने प्राप्नुतः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१२०/१२२) द्वयोः अपि एकववचनबहुवचने प्राप्नुतः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१२१/१२२) बहुषु अपि एकवचनद्विवचने प्राप्नुतः ।

(पा-२,३.१.१; अकि-१,४३९.२-४४१.१८; रो-२,७५१-७६२; भा-१२२/१२२) अर्थतः व्यवस्था भविष्यति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१/२९) परिगणनं कर्तव्यम् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२/२९) तिङ्कृत्तद्धितसमासैः परिसङ्ख्यानम् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-३/२९) तिङ्कृत्तद्धितसमासैः परिसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-४/२९) तिङ् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-५/२९) क्रियते कटः ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-६/२९) कृत् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-७/२९) कृतः कटः ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-८/२९) तद्धित ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-९/२९) औपगवः कापटवः ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१०/२९) समास ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-११/२९) चित्रगुः शबलगुः ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१२/२९) उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिवचनम् । उत्सर्गे हि प्रातिपदिकसामानाधिकरण्ये विभक्तिः वक्तव्या ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१३/२९) क्व ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१४/२९) कटम् करोति भीष्मम् उदारम् शोभनम् दर्शनीयम् इति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१५/२९) कटशब्दात् उत्पद्यमानया द्वितीयया अभिहितम् कर्म इति कृत्वा भीष्मादिभ्यः द्वितीया न प्राप्नोति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१६/२९) का तर्हि स्यात् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१७/२९) षष्ठी ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१८/२९) शेषलक्षणा षष्ठी ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-१९/२९) अशेषत्वात् न भविष्यति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२०/२९) अन्याः अपि न प्राप्नुवन्ति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२१/२९) किम् कारणम् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२२/२९) कर्मादीन् आमभावात् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२३/२९) समयश्च कृतः ने केवला प्रकृतिः प्रोक्तव्या न केवलः प्रत्ययः इति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२४/२९) न चान्या उत्पद्यमाना एतम् अभिसम्बन्धम् उत्सहन्ते वक्तुम् इति कृत्वा द्वितीया भविष्यति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२५/२९) अथ वा कटः अपि कर्म भीष्मादयः अपि ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२६/२९) तत्र कर्मणि इति एव सिद्धम् ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२७/२९) अथ वा कटः एव कर्म ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२८/२९) तत्सामानाधिकरण्यात् भीष्मादिभ्यः द्वितीया भविष्यति ।

(पा-२,३.१.२; अकि-१,४४१.१९-४४२.५; रो-२,७६२-७६४; भा-२९/२९) तस्मात् न अर्थः परिगणनेन ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१/३९) द्वयोः क्रिययोः कारके अन्यतरेण अभिहिते विभक्त्यभावप्रसङ्गः । द्वयोः क्रिययोः कारके अन्यतरेण अभिहिते विभक्तिः न प्राप्नोति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२/३९) क्व ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३/३९) प्रासादे आस्ते , शयने आस्ते इति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-४/३९) किम् कारणम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-५/३९) सदिप्रत्ययेन अभिहितम् अधिकरणम् इति कृत्वा सप्तमी न प्राप्नोति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-६/३९) न वा अन्यतरेण अनभिधानात् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-७/३९) न वा एषः दोषः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-८/३९) किम् कारणम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-९/३९) अन्यतरेण अनभिधानात् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१०/३९) अन्यतरेण अत्र अनभिधानम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-११/३९) सदिप्रत्ययेन भिधानम् आसिप्रत्ययेन अनभिधानम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१२/३९) यतः अनभिधानम् तदाश्रया सप्तमी भविष्यति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१३/३९) कुतः न खलु एतत् सति अभिधाने च अनभिधाने च अनभिहिताश्रया सप्तमी भविष्यति न पुनः अभिहिताश्रयः प्रतिषेधः इति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१४/३९) अनभिहिते हि विधानम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१५/३९) अनभिहिते हि सप्तमी विधीयते न अभिहिते प्रतिषेधः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१६/३९) यदि अपि तावत् अत्र एतत् शक्यते वक्तुम् यत्र अन्या च अन्या च क्रिया यत्र तु खलु सा एव क्रिया तत्र कथम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१७/३९) आसने आस्ते ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१८/३९) शयने शेते इति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-१९/३९) अत्र अपि अन्यत्वम् अस्ति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२०/३९) कुतः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२१/३९) कालभेदात् साधनभेदात् च ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२२/३९) एकस्य अत्र आसेः आसिः साधनम् सर्वकालः च प्रत्ययः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२३/३९) अपरस्य बाह्यम् साधनम् वर्तमानकालः च प्रत्ययः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२४/३९) किम् पुनः द्रव्यम् साधनम् आहोस्वित् गुणः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२५/३९) किम् च अतः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२६/३९) यदि द्रव्यम् साधनम् न एतत् अन्यत् भवति अभिहितात् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२७/३९) अथ हि गुणः साधनम् भवति एतत् अन्यत् अभिहितात् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२८/३९) अन्यः हि सदिगुणः अन्यः च आसिगुणः ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-२९/३९) किं पुनः साधनम् न्याय्यम् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३०/३९) गुणः इति आह ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३१/३९) कथम् ज्ञायते ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३२/३९) एवम् हि कः चित् कम् चित् पृच्छति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३३/३९) क्व देवदत्तः इति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३४/३९) सः तस्मै आचष्टे ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३५/३९) असौ वृक्षे इति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३६/३९) कतरस्मिन् ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३७/३९) यः तिष्ठति इति ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३८/३९) सः वृक्षः अधिकरणम् भूत्वा अन्येन शब्देन अभिसम्बध्यमानः कर्ता सम्पद्यते ।

(पा-२,३.१.३; अकि-१,४४२.६-२६; रो-२,७६४-७६७; भा-३९/३९) द्रव्ये पुनः साधने सति यत् कर्म कर्म एव स्यात् यत् करणम् करणम् एव यत् अधिकरणम् अधिकरणम् एव ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१/३०) अनभिहितवचनम् अनर्थकम् प्रथमाविधानस्य अनवकाशत्वात् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२/३०) अनभिहितवचनम् अनर्थकम् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-३/३०) किम् कारणम् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-४/३०) प्रथमाविधानस्य अनवकाशत्वात् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-५/३०) अनवकाशा प्रथमा ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-६/३०) सा वचनात् भविष्यति. सावकाशा प्रथमा ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-७/३०) कः अवकाशः ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-८/३०) अकारकम् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-९/३०) वृक्षः प्लक्षः इति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१०/३०) अवकाशः अकारकम् इति चेत् न अस्तिः भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानः अपि अस्ति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-११/३०) अवकाशः अकारकम् इति चेत् तत् न ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१२/३०) किम् कारणम् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१३/३०) अस्तिः भवन्तीपरः प्रथमपुरुषः अप्रयुज्यमानः अपि अस्ति इति गम्यते ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१४/३०) वृक्षः प्लक्षः ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१५/३०) अस्ति इति गम्यते. विप्रतिषेधात् वा प्रथमाभावः । अथ वा

द्वितीयादयः क्रियन्ताम् प्रथमा वा इति प्रथमा भविष्यति विप्रतिषेधेन ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१६/३०) द्वितीयादीनाम् अवकाशः कटम् करोति भीष्मम् उदारम् शोभनम्दर्शनीयम् इति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१७/३०) प्रथमायाः अवकाशः अकारकम् वृक्षः प्लक्षः इति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१८/३०) इह उभयम् प्राप्नोति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-१९/३०) कृतः कटः भीष्मः उदारः शोभनः दर्शनीयः इति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२०/३०) प्रथमा भविष्यति विप्रतिषेधेन ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२१/३०) न सिध्यति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२२/३०) परत्वात् षष्ठी प्राप्नोति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२३/३०) शेषलक्षणा षष्ठी अशेषत्वात् न भविष्यति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२४/३०) कृत्प्रयोगे तु परम् विधानम् षष्ठ्याः तत्प्रतिषेधार्थम् ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२५/३०) कृत्प्रयोगे तु परत्वा त्षष्ठी प्राप्नोति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२६/३०) तत्प्रतिषेधार्थम् अनभिहिताधिकारः कर्तव्यः ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२७/३०) कर्तव्यः कटः इति ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२८/३०) सः कथम् कर्तव्यः ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-२९/३०) यदि एकत्वादयः विभक्त्यर्थाः ।

(पा-२,३.१.४; अकि-१,४४३.१-१८; रो-२,७६७-७६९; भा-३०/३०) अथ हि कर्मादयः विभक्त्यर्थाः न अर्थः अनभिहिताधिकारेण ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१/२५) समयानिकषाहायोगेषु उपसङ्ख्यानम् । समयानिकषाहायोगेषु उपसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२/२५) समया ग्रामम् निकषा ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-३/२५) हायोगे ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-४/२५) हा देवदत्तम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-५/२५) हा यज्ञदत्तम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-६/२५) अपरः आह _ द्वितीयाविधाने अभितःपरितःसमयानिकषाध्यधिधिग्योगेषु उपसङ्ख्यानम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-७/२५) द्वितीयाविधाने अभितःपरितःसमयानिकषाध्यधिधिग्योगेषु उपसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-८/२५) अभितः ग्रामम् परितः ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-९/२५) समया ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१०/२५) निकषा ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-११/२५) अधि अधि ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१२/२५) धिक् जाल्मम् धिक् वृषलम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१३/२५) अपरः आह ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१४/२५) उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु द्वितीया आम्रेडितान्तेषु ततः अन्यत्र अपि दृश्यते ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१५/२५) उभय सर्व इति एताभ्याम् तसन्ताभ्याम् द्वितीया वक्तव्या ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१६/२५) उभयतः ग्रामम् सर्वतः ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१७/२५) धिग्योगे ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१८/२५) धिक् जाल्मम् धिक् वृषलम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-१९/२५) उपर्यादिषु त्रिषु आम्रेडितान्तेषु द्वितीया वक्तव्या ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२०/२५) उपरि उपरि ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२१/२५) अधि अधि ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२२/२५) अधः अधः ग्रामम् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२३/२५) ततः अन्यत्र अपि दृश्यते ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२४/२५) न देवदत्तम् प्रतिभाति किम् चित् ।

(पा-२,३.२; अकि-१,४४३.२०-४४४.११; रो-२,७६९-७७०; भा-२५/२५) बुभुक्षितम् न प्रतिभाति किम् चित् ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१/२७) किमर्थम् इदम् उच्यते ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२/२७) तृतीया यथा स्यात् ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-३/२७) अथ द्वितीया सिद्धा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-४/२७) सिद्धा कर्मणि इति एव ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-५/२७) तृतीया अपि सिद्धा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-६/२७) कथम् ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-७/२७) सुपाम् सुपः भवन्ति इति एव ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-८/२७) असति एतस्मिन् सुपाम् सुपः भवन्ति इति तृतीयार्थः अयम्

आरम्भः ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-९/२७) यवाग्वा अग्निहोत्रं जुहोति ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१०/२७) एवम् तर्हि तृतीया अपि सिद्धा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-११/२७) कथम् ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१२/२७) कर्तृकरणयोः इति एव ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१३/२७) अयम् अग्निहोत्रशब्दः अस्ति एव ज्योतिषि वर्तते ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१४/२७) तद्यथा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१५/२७) अग्निहोत्रम् प्रज्वलयति इति ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१६/२७) अस्ति हविषि वर्तते ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१७/२७) तत् यथा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१८/२७) अग्निहोत्रम् जुहोति इति ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-१९/२७) जुहोतिः च अस्ति एव प्रक्षेपणे वर्तते अस्ति प्रीणात्यर्थे वर्तते ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२०/२७) तत् यथा तावत् यवागूशब्दात् तृतीया तदा अग्निहोत्रशब्दः ज्योतिषि वर्तते जुहोतिः च प्रीणात्यर्थे ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२१/२७) तत् यथा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२२/२७) यवाग्वा अग्निहोत्रम् जुहोति ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२३/२७) अग्निं प्रीणाति ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२४/२७) यदा यवागूशब्दात् द्वितीया तदा अग्निहोत्रशब्दः हविषि वर्तते जुहोतिः च प्रक्षेपणे ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२५/२७) तत् यथा ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२६/२७) यवागूम् अग्निहोत्रम् जुहोति ।

(पा-२,३.३; अकि-१,४४४.१३-२२; रो-२,७७१-७७२; भा-२७/२७) यवागूम् हविः अग्नौ प्रक्षिपति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१/१८) इह कस्मात् न भवति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-२/१८) किम् ते बाभ्रवशालङ्कायनानाम् अन्तरेण गतेन इति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-३/१८) लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्य एव इति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-४/१८) अथ वा यदि अपि तावत् अयम् अन्तरेणशब्दः दृष्टापचारः निपातः च अनिपातः च अयं तु खलु अन्तराशब्दः अदृष्टापचारः निपातः एव ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-५/१८) तस्य अस्य कः अन्यः द्वितीयः सहायः भवितुम् अर्हति अन्यत् अतः निपातात् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-६/१८) तत् यथा ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-७/१८) अस्य गोः द्वितीयेन अर्थः इति गौः एव आनीयते न अश्वः न गदर्भः ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-८/१८) अन्तरान्तरेणयुक्तानाम् अप्रधानवचनम् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-९/१८) अन्तरान्तरेणयुक्तानामप्रधानग्रहणम् वक्तव्यम् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१०/१८) अप्रधाने द्वीइया भवति इति वक्तव्यम् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-११/१८) अन्तरा त्वाम् च माम् च कमण्डलुः इति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१२/१८) कमण्डलोः द्वितीया मा भूत् इति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१३/१८) कः पुनः एताभ्याम् कमण्डलोः योगः ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१४/१८) यत् तत् त्वाम् च माम् च अन्तरा तत् कमण्डलोः स्थानम् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१५/१८) तत्त् अर्हि वक्तव्यम् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१६/१८) न वक्तव्यम् ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१७/१८) कमण्डलोः द्वितीया कस्मात् न भवति ।

(पा-२,३.४; अकि-१,४४४.२४-४४५.१०; रो-२,७७२-७७४; भा-१८/१८) उपपदविभक्तेः कारकविभक्तिः बलीयसी इति प्रथमा भविष्यति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१/४०) अत्यन्तसंयोगे कर्मवत् लाद्यर्थम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२/४०) अत्यन्तसंयोगे कालाध्वानौ कर्मवत् भवतः इति वक्तव्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३/४०) किम् प्रयोजनम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-४/४०) लाद्यर्थम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-५/४०) लादिभिः अभिधानम् यथा स्यात् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-६/४०) आस्यते मासः ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-७/४०) शय्यते क्रोशः ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-८/४०) अथ वत्करणम् किमर्थम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-९/४०) स्वाश्रयम् अपि यथा स्यात् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१०/४०) आस्यते मासम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-११/४०) शय्यते क्रोशम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१२/४०) अकर्मकाणाम् भावे लः भवति इति भावे लः यथा स्यात् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१३/४०) तत् तर्हि वक्तव्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१४/४०) न वक्तव्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१५/४०) प्राकृतमेव एतत् कर्म यथा कटम् करोति शकटम् करोति इति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१६/४०) एवम् मन्यते ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१७/४०) यत्र कः चित्क्रियाकृतः विशेषः उपजायते तत् न्याय्यम् कर्म इति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१८/४०) न च इह कः चित् क्रियाकृतः विशेषः उपजायते ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-१९/४०) न एवम् शक्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२०/४०) इह अपि न स्यात् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२१/४०) आदित्यम् पश्यति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२२/४०) हिमवन्तम् शृणोति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२३/४०) ग्रामम् गच्छति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२४/४०) तस्मात् प्राकृतमेव एतत् कर्म यथा कटम् करोति शकटम् करोति इति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२५/४०) यदि तर्हि प्राकृतम् एव एतत् कर्म अकर्मकाणाम् भावे लः भवति इति भावे लः न प्राप्नोति. आस्यते मासम् देवदत्तेन इति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२६/४०) तत् तर्हि वक्तव्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२७/४०) न वक्तव्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२८/४०) अकर्मकाणाम् इति उच्यते न च के चित् कालभावाध्वभिः अकर्मकाः ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-२९/४०) ते एवम् विज्ञास्यामः ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३०/४०) क्व चित् ये अकर्मकाः इति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३१/४०) अथ वा येन कर्मणा सकर्मकाः च अकर्मकाः च भवन्ति तेन अकर्मकाणाम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३२/४०) न च एतेन कर्मणा कः चिद् अपि अकर्मकः ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३३/४०) अथ वा यत् कर्म भवति न च भवति तेन कर्मकाणाम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३४/४०) न च एतत् कर्म क्व चित् अपि न भवति ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३५/४०) न तर्हि इदानीम् इदम् सूत्रम् वक्तव्यम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३६/४०) वक्तव्यम् च ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३७/४०) किम् प्रयोजनम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३८/४०) यत्र अक्रियया अत्यन्तसंयोगः तदर्थम् ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-३९/४०) क्रोशम् कुटिला नदी ।

(पा-२,३.५; अकि-१,४४५.१३-४४६.४; रो-२,७७४-७७७; भा-४०/४०) क्रोशम् रमणीया वनराजिः ।

(पा-२,३.६; अकि-१,४४६.६-७; रो-२,७७७; भा-१/३) क्रियापर्वर्गे इति वक्तव्यम् ।

(पा-२,३.६; अकि-१,४४६.६-७; रो-२,७७७; भा-२/३) साधनापवर्गे मा भूत् ।

(पा-२,३.६; अकि-१,४४६.६-७; रो-२,७७७; भा-३/३) मासम् अधीतः अनुवाको न च अनेन गृहीतः इति ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-१/९) क्रियामध्ये इति वक्तव्यम् ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-२/९) इह अपि यथा स्यात् ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-३/९) अद्य देवदत्तः भुक्त्वा द्व्यहात् भोक्ता द्व्यहे भोक्ता ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-४/९) कारकमध्ये इति इयति उच्यमाने इह एव स्यात्_ इहस्थः अयम् इष्वासः क्रोशात् लक्ष्यम् विध्यति क्रोशे लक्ष्यम् विध्यति ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-५/९) यम् च विध्यति यतः च विध्यति उभयोः तन्मध्यम् भवति ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-६/९) तत् तर्हि वक्तव्यम् ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-७/९) न वक्तव्यम् ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-८/९) न अन्तरेण साधनम् क्रियायाः प्रवृत्तिः भवति ।

(पा-२,३.७; अकि-१,४४६.९-१३; रो-२,७७७-७७८; भा-९/९) क्रियामध्यम् चेत् कारकमध्यम् अपि भवति तत्र कारकमध्ये इति एव सिद्धम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१/२३) कर्मप्रवचनीययुक्ते प्रत्यादिभिः च लक्षणादिषु उपसङ्ख्यानम् सप्तमीपञ्चम्योः प्रतिषेधार्थम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-२/२३) कर्मप्रवचनीययुक्ते प्रत्यादिभिः च लक्षणादिषु उपसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-३/२३) वृक्षम् प्रति विद्योतते विद्युत् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-४/२३) वृक्षम् परि ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-५/२३) वृक्षमनु ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-६/२३) साधुः देवदत्तः मातरम् प्रति ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-७/२३) मातरम् परि ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-८/२३) मातरम् अनु ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-९/२३) किम् प्रयोजनम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१०/२३) सप्तमीपञ्चम्योः प्रतिषेधार्थम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-११/२३) सप्तमीपञ्चम्यौ मा भूताम् इति ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१२/२३) साधुनिपुणाभ्याम् अर्चायाम् सप्तमी इति सप्तमी ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१३/२३) पञ्चमी अपाङ्परिभिः इति पञ्चमी ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१४/२३) तत्र अयम् अपि अर्थः अप्रतेः इति न वक्तव्यम् भवति ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१५/२३) तत् तर्हि वक्तव्यम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१६/२३) न वक्तव्यम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१७/२३) उक्तं वा ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१८/२३) किम् उक्तम् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-१९/२३) एकत्र तावत् उक्तम् अप्रतेः इति ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-२०/२३) इतरत्र अपि यदि अपि तावत् अयम् परिः दृष्टापचारः वर्जने च अवर्जने च अयं खलु अपशब्दः अदृष्टापचारः वर्जनार्थः एव ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-२१/२३) तस्य कः अन्यः द्वितीयः सहायः भवितुम् अर्हति अन्यत् अतः वर्जनार्थात् ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-२२/२३) तत् यथा ।

(पा-२,३.८; अकि-१,४४६.१५-४४७.५; रो-२,७७८-७७९; भा-२३/२३) अस्य गोः द्वितीयेन अर्थः इति गौः एव आनीयते न अश्वः न गदर्भः ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१/५५) कथम् इदम् विज्ञायते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२/५५) यस्य च ऐश्वर्यम् ईश्वरता ईश्वरभावः तस्मात् कर्मप्रवचनीययुक्तात् इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३/५५) आहोस्वित् यस्य स्वस्य ईश्वरः तस्मात् कर्मप्रवचनीययुक्तात् इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४/५५) कः च अत्र विशेषः ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५/५५) यस्य च ईश्वरवचनम् इति कर्तृनिर्देशः चेत् अवचनात्

सिद्धम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-६/५५) यस्य च ईश्वरवचनम् इति कर्तृनिर्देशः चेत् अन्तरेण वचनम् सिद्धम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-७/५५) अधि ब्रह्मदत्ते पञ्चालाः ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-८/५५) आधृताः ते तस्मिन् भवन्ति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-९/५५) सत्यम् एवम् एतत् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१०/५५) नित्यम् परिग्रहीतव्यम् परिग्रहीत्रधीनम् भवति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-११/५५) प्रथमानुपपत्तिः तु । प्रथमा न उपपद्यते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१२/५५) कुतः ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१३/५५) पञ्चालेभ्यः ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१४/५५) का तर्हि स्यात् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१५/५५) षष्ठीसप्तम्यौ ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१६/५५) स्वामीश्वराधिपति इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१७/५५) न तत्र अधिशब्दः पठ्यते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१८/५५) यदि अपि न पठ्यते अधिः ईश्वरवाची ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-१९/५५) न तत्र पर्यायवचनानाम् ग्रहणम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२०/५५) कथम् ज्ञायते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२१/५५) यत् अयम् कस्य चित् पर्यायवचनस्य ग्रहणम् करोति_ अधिपतिदायाद इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२२/५५) षष्ठी तर्हि प्राप्नोति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२३/५५) शेषलक्षणा षष्ठी अशेषत्वात् न भविष्यति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२४/५५) द्वितीया तर्हि प्राप्नोति कर्मप्रवचनीययुक्ते द्वितीया इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२५/५५) सप्तम्या उक्तत्वात् तस्य अभिसम्बन्धस्य द्वितीया न भविष्यति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२६/५५) भवेत् यः अधेः ब्रहमदत्तस्य च अभिसम्बन्धः सः सप्तम्या उक्तः स्यात् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२७/५५) यः तु खलु अधेः पञ्चालानाम् च अभिसम्बन्धः तत्र द्वितीया प्राप्नोति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२८/५५) स्ववचनात् सिद्धम् । अस्तु यस्य स्वस्य ईश्वरः तस्मात्

कर्मप्रवचनीययुक्तात् इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-२९/५५) एवम् अपि अन्तरेण वचनम् सिद्धम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३०/५५) अधि ब्रह्मदत्तः पञ्चालेषु ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३१/५५) आधृतः स तेषु भवति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३२/५५) सत्यम् एवम् एतत् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३३/५५) नित्यम् परिग्रहीता परिग्रहीतव्याधीनः भवति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३४/५५) प्रथमानुपपत्तिः तु ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३५/५५) प्रथमा न उपपद्यते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३६/५५) कुतः ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३७/५५) ब्रह्मदत्तात् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३८/५५) का तर्हि स्यात् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-३९/५५) षष्ठीसप्तम्यौ ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४०/५५) स्वामीश्वराधिपति इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४१/५५) न तत्र अधिशब्दः पठ्यते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४२/५५) यदि अपि न पठ्यते अधिः ईश्वरवाची ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४३/५५) न तत्र पर्यायवचनानाम् ग्रहणम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४४/५५) कथम् ज्ञायते ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४५/५५) यत् अयम् कस्य चित् पर्यायवचनस्य ग्रहणम् करोति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४६/५५) अधिपतिदायाद इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४७/५५) षष्ठी तर्हि प्राप्नोति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४८/५५) शेषलक्षणा षष्ठी अशेषत्वात् न भविष्यति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-४९/५५) द्वितीया तर्हि प्राप्नोति कर्मप्रवचनीययुक्ते द्वितीया इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५०/५५) सप्तम्या उक्तत्वात् तस्य अभिसम्बन्धस्य द्वितीया न भविष्यति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५१/५५) भवेत् यः धेः पञ्चालानाम् च अभिसम्बन्धः सः सप्तम्या उक्तः स्यात् यः तु खलु अधेः ब्रह्मदत्तस्य च अभिसंबन्धः तत्र द्वितीया प्राप्नोति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५२/५५) एवं तर्हि स्ववचनात् सिद्धम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५३/५५) अधिः स्वम् प्रति कर्मप्रवचनीयसंज्ञः भवति इति वक्तव्यम् ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५४/५५) एवम् अपि यदा ब्रह्मदत्ते अधिकरणे सप्तमी तदा पञ्चालेभ्यः द्वितीया प्राप्नोति कर्मप्रवचनीययुक्ते द्वितीय इति ।

(पा-२,३.९; अकि-१,४४७.७-४४८.११; रो-२,७७९-७८२; भा-५५/५५) उपपदविभक्तेः कारकविभक्तिः बलीयसी इति प्रथमा भविष्यति

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१/२९) अध्वनि अर्थग्रहणम् । अध्वनि अर्थग्रहणम् कर्तव्यम् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२/२९) इह अपि मा भूत् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-३/२९) पन्थानम् गच्छति ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-४/२९) वीवधम् गच्छत् इ इति ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-५/२९) आस्थितप्रतिषेधः च ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-६/२९) आस्थितप्रतिषेधः च अयम् वक्तव्यः ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-७/२९) यः हि उत्पथेन पन्थानम् गच्छति पथे गच्छति इति एव तत्र भवितव्यम् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-८/२९) किम् अर्थम् पुनः इदम् उच्यते ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-९/२९) चतुर्थी यथा स्यात् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१०/२९) अथ द्वितीया सिद्धा ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-११/२९) सिद्धा कर्मणि इति एव ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१२/२९) चतुर्थी अपि सिद्धा ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१३/२९) । कथम् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१४/२९) सम्प्रदाने इति एव ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१५/२९) न सिध्यति ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१६/२९) कर्मणा यम् अभिप्रैति सः संप्रदानम् इति उच्यते ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१७/२९) क्रियया च असौ ग्रामम् अभिप्रैति ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१८/२९) कया क्रियया ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-१९/२९) गमिक्रियया ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२०/२९) क्रियाग्रहणम् अपि तत्र चोद्यते ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२१/२९) चेष्टायाम् अनध्वनि स्त्रियम् गच्छति अजाम् नयति इति अतिप्रसङ्गः ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२२/२९) चेष्टायाम् अनध्वनि स्त्रियम् गच्छति अजाम् नयति इति अतिप्रसङ्गः भवति ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२३/२९) सिद्धम् तु असम्प्राप्तवचनात् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२४/२९) सिद्धम् एतत् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२५/२९) कथम् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२६/२९) असम्प्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवतः इति वक्तव्यम् ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२७/२९) अध्वनः च अनपवादः ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२८/२९) एवम् च कृत्वा अनध्वनि इति एतत् अपि न वक्तव्यम् भवति ।

(पा-२,३.१२; अकि-१,४४८.१३-४४९.३; रो-२,७८२-७८४; भा-२९/२९) सम्प्राप्तम् हि एतत् कर्म अध्वानम् गच्छति इति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१/४०) चतुर्थीविधाने तादर्थ्ये उपसङ्ख्यानम् । चतुर्थीविधाने तादर्थ्ये उपसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२/४०) यूपाय दारु कुण्डलाय हिरण्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३/४०) किम् इदम् तादर्थ्यम् इति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-४/४०) तदर्थस्य भावः तादर्थ्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-५/४०) तदर्थम् पुनः किम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-६/४०) सर्वनाम्नः अयम् चतुर्थ्यन्तस्य अर्थशब्देन सह समासः ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-७/४०) कथम् च अत्र चतुर्थी ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-८/४०) अनेन एव ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-९/४०) यदि एवम् इतरेतराश्रयम् भवति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१०/४०) का इतरेतराश्रयता ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-११/४०) निर्देशोत्तरकालम् चतुर्थ्या भवितव्यम् चतुर्थ्या च निर्देशः तत् इतरेतराश्रयम् भवति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१२/४०) इतरेतराश्रयाणि च न प्रकल्पन्ते ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१३/४०) तत् तर्हि वक्तव्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१४/४०) न वक्तव्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१५/४०) आचार्यप्रवृत्तिः ज्ञापयति भवति अर्थशब्देन योगे चतुर्थी इति यत् अयम् चर्तुर्थी तदर्थार्थ इति चतुर्थ्यन्तस्य अर्थशब्देन सह समासम् शास्ति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१६/४०) न खलु अपि अवश्यं चतुर्थ्यन्तस्य एव अर्थशब्देन सह समासः भवति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१७/४०) किम् तर्हि ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१८/४०) षष्ठ्यन्तस्य अपि भवति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-१९/४०) तत् यथा ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२०/४०) गुरोः इदम् गुर्वर्थम् इति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२१/४०) यदि तादर्थ्ये उपसङ्ख्यानम् क्रियते न अर्थः सम्प्रदानग्रहणेन ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२२/४०) यः अपि हि उपाध्यायाय गौः दीयते उपाध्यायार्थः सः भवति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२३/४०) तत्र तादर्थ्ये इति एव सिद्धम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२४/४०) अवश्यम् संप्रदानग्रहणम् कर्तव्यम् या अन्येन लक्षणेन सम्प्रदानसञ्ज्ञा तदर्थम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२५/४०) छात्राय रुचितम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२६/४०) छात्राय स्वदितम् इति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२७/४०) तत् तर्हि उपसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२८/४०) न कर्तव्यम् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-२९/४०) आचार्यप्रवृत्तिः ज्ञापयति भवति तादर्थ्ये चतुर्थी इति यत् अयम् चतुर्थी तदर्थार्थ इति चतुर्थ्यन्तस्य तदर्थेन सह समासम् शास्ति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३०/४०) क्लृपि सम्पद्यमाने ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३१/४०) क्लृपि सम्पद्यमाने चतुर्थी वक्तव्या ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३२/४०) मूत्राय कल्पते यवागूः ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३३/४०) उच्चाराय कल्पते यवान्नम् इति ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३४/४०) उत्पातेन ज्ञाप्यमाने ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३५/४०) उत्पातेन ज्ञाप्यमाने चतुर्थी वक्तव्या ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३६/४०) वाताय कपिला विद्युत् आतपाय अतिलोहिनी पीता भवति सस्याय दुर्भिक्षाय सिता भवेत् ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३७/४०) मांसौदनाय व्याहरति मृगः ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३८/४०) हितयोगे च ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-३९/४०) हितयोगे चतुर्थी वक्तव्या ।

(पा-२,३.१३; अकि-१,४४९.५-४५०.३; रो-२,७८४-७८७; भा-४०/४०) । हितम् अरोचकिने हितम् आमयाविने ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१/१७) स्वस्तियोगे चतुर्थी कुशलार्थैः आशिषि वाविधानात् ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-२/१७) स्वस्तियोगे चतुर्थी कुशलार्थैः आशिषि वाविधानात् भवति विप्रतिषेधेन ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-३/१७) स्वस्तियोगे चतुर्थ्याः अवकाशः स्वस्ति जाल्माय स्वस्ति वृषलाय ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-४/१७) कुशलार्थैः आशिषि वाविधानस्य अवकाशः अन्ये कुशलार्थाः ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-५/१७) कुशलम् देवत्ताय कुशलम् देवदत्तस्य ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-६/१७) इह उभयम् प्राप्नोति ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-७/१७) स्वस्ति गोभ्यः स्वस्ति ब्राह्मणेभ्यः इति ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-८/१७) चतुर्थी भवति विप्रतिषेधेन ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-९/१७) अलमिति पर्याप्त्यर्थग्रहणम् ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१०/१७) अलमिति पर्याप्त्यर्थग्रहणम् कर्तव्यम् ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-११/१७) इह मा भूत् ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१२/१७) अलङ्कुरुते कन्याम् इति ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१३/१७) अपरः आह_ अलम् इति पर्याप्त्यर्थग्रहणम् कर्तव्यम् ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१४/१७) इह अपि यथा स्यात् ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१५/१७) अलम् मल्लः मल्लाय ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१६/१७) प्रभुःमल्लः मल्लाय ।

(पा-२,३.१६; अकि-१,४५०.५-१४; रो-२,७८७-७८८; भा-१७/१७) प्रभवति मल्लः मल्लाय इति ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-१/१३) अप्राणिषु इति उच्यते ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-२/१३) तत्र इदम् न सिध्यति_ न त्वा श्वानम् मन्ये , न त्वा शुने मन्ये इति ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-३/१३) एवम् तर्हि योगविभागः करिष्यते ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-४/१३) मन्यकर्मणि अनादरे विभाषा ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-५/१३) ततः अप्राणिषु ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-६/१३) अप्राणिषु च विभाषा इति ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-७/१३) इह अपि तर्हि प्राप्नोति_ न त्वा काकम् मन्ये , न त्वा शुकम् मन्ये इति ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-८/१३) यत् एतत् अप्राणिषु इति एतत् अनावादिषु इति वक्ष्यामि ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-९/१३) इमे च नावादयः भविष्यन्ति ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-१०/१३) न त्वा नावम् मन्ये यावत् तीर्णम् न नाव्यम् ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-११/१३) न त्वा अन्नम् मन्ये यावत् भुक्तम् न श्राद्धम् ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-१२/१३) अत्र येषु प्राणिषु न इष्यते ते नावादयः भविष्यन्ति ।

(पा-२,३.१७; अकि-१,४५०.१६-४५१.३; रो-२,७८८-७८९; भा-१३/१३) मन्यकर्मणि प्रकृष्यकुत्सितग्रहणम् । मन्यकर्मणि प्रकृष्यकुत्सितग्रहणम् कर्तव्यम् इह मा भूत्_ त्वाम् तृणम् मन्ये इति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१/३३) तृतीयाविधाने प्रकृत्यादिभ्यः उपसङ्ख्यानम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२/३३) तृतीयाविधाने प्रकृत्यादिभ्यः उपसङ्ख्यानम् कर्तव्यम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-३/३३) तृतीयाविधाने प्रकृत्यादिभ्यः उपसङ्ख्यानम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-४/३३) प्रकृत्या अभिरूपः प्रकृत्या दर्शनीयः ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-५/३३) प्रायेण याज्ञिकाः प्रायेण वैयाकरणाः ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-६/३३) माठरः अस्मि गोत्रेण. गार्ग्यः अस्मि गोत्रेण ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-७/३३) समेन धावति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-८/३३) विषमेण धावति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-९/३३) द्विद्रोणेन धान्यम् क्रीणाति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१०/३३) त्रिद्रोणेन धान्यम् क्रीणाति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-११/३३) पञ्चकेन पशून् क्रीणाति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१२/३३) साहस्रेण अश्वान् क्रीणाति. तत् तर्हि वक्तव्यम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१३/३३) न वक्तव्यम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१४/३३) कर्तृकरणयोः तृतीया इति एव सिद्धम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१५/३३) इह तावत् प्रकृत्या अभिरूपः प्रकृत्या दर्शनीयः इति प्रकृतिकृतम् तस्य आभिरूप्यम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१६/३३) प्रायेण याज्ञिकाः प्रायेण वैयाकरणाः इति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१७/३३) एषः तत्र प्रायः येन ते अधीयते ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१८/३३) माठरः अस्मि गोत्रेण. गार्ग्यः अस्मि गोत्रेण इति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-१९/३३) एतेन अहम् सञ्ज्ञाये ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२०/३३) समेन धावति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२१/३३) विषमेण धावति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२२/३३) इदम् अत्र प्रयोक्तव्यम् सत् न प्रयुज्यते समेन पथा धावति विषमेण पथा धावतीति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२३/३३) द्विद्रोणेन धान्यम् क्रीणाति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२४/३३) त्रिद्रोणेन धान्यम् क्रीणाति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२५/३३) तादर्थ्यात् ताच्छब्द्यम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२६/३३) द्विद्रोणार्थम् द्विद्रोणम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२७/३३) द्विद्रोणेन हिरण्येन धान्यम् क्रीणाति इति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२८/३३) पञ्चकेन पशून् क्रीणाति इति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-२९/३३) अत्र अपि तादर्थ्यात् ताच्छब्द्यम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-३०/३३) पञ्चपश्वर्थः पञ्चकः ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-३१/३३) पञ्चकेन पशून् क्रीणाति इति ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-३२/३३) साहस्रेण अश्वान् क्रीणाति इति. सहस्रपरिमाणम् साहस्रम् ।

(पा-२,३.१८; अकि-१,४५२.२-१५; रो-२,७८९-७९१; भा-३३/३३) साहस्रेण हिरण्येन अश्वान् क्रीणाति इति.

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१/२८) किम् उदाहरणम् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२/२८) तिलैः सह माषान् वपति इति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-३/२८) न एतत् अस्ति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-४/२८) तिलैः मिश्रीकृत्य माषाः उप्यन्ते ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-५/२८) तत्र करणे इति एव सिद्धम् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-६/२८) इदम् तर्हि ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-७/२८) पुत्रेण सह आगतः देवदत्तः इति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-८/२८) अप्रधाने कर्तरि तृतीया यथा स्यात् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-९/२८) एतत् अपि न अस्ति प्रयोजनम् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१०/२८) प्रधाने कर्तरि लादयः भवन्ति इति प्रधानकर्ता क्तेन अभिधीयते यः च अप्रधानम् सिद्धा तत्र कर्तरि इति एव तृतीया ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-११/२८) इदम् तर्हि ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१२/२८) पुत्रेण सह आगमनम् देवदत्तस्य इति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१३/२८) षष्ठी अत्र बाधिका भविष्यति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१४/२८) इदम् तर्हि ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१५/२८) पुत्रेण सह स्थूलः ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१६/२८) पुत्रेण सह पिङ्गलः इति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१७/२८) इदम् च अपि उदाहरणम् तिलैः सह माषान् वपति इति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१८/२८) ननु च उक्तम् तिलैः मिश्रीकृत्य माषाः उप्यन्ते ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-१९/२८) तत्र करणे इति एव सिद्धम् इति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२०/२८) भवेत् सिद्धम् यदा तिलैः मिश्रीकृत्य उप्येरन् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२१/२८) यदा तु खलु कस्य चिन् माषबीजावापः उपस्थितः तदर्थम् च क्षेत्रम् उपार्जितम् तत्र अन्यत् अपि किं चिद् उप्यते यदि भविष्यति भविष्यति इति तदा न सिध्यति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२२/२८) सहयुक्ते अप्रधानवचनम् अनर्थकम् उपपदविभक्तेः कारकविभक्तिबलीयस्त्वात् अन्यत्र अपि ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२३/२८) सहयुक्ते अप्रधानवचनम् अनर्थकम् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२४/२८) किं कारणम् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२५/२८) उपपदविभक्तेः कारकविभक्तिबलीयस्त्वात् ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२६/२८) अन्यत्र अपि कारकविभक्तिर्बलीयसी इति प्रथमा भविष्यति ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२७/२८) क्व अन्यत्र ।

(पा-२,३.१९; अकि-१,४५२.१७-४५३.७; रो-२,७९१-७९३; भा-२८/२८) गाः स्वामी व्रजति इति ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-१/८) इह कस्मात् न भवति ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-२/८) अक्षि काणम् अस्य इति ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-३/८) अङ्गात् विकृतात् तद्विकारतः चेत् अङ्गिनः वचनम् ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-४/८) अङ्गात् विकृतात् तृतीया वक्तव्या तेन एव चेत् विकारेण अङ्गी द्योत्यते इति वक्तव्यम् ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-५/८) तत् तर्हि वक्तव्यम् ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-६/८) न वक्तव्यम् ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-७/८) अङ्गशब्दः अयम् समुदायशब्दः येन इति च करणे एषा तृतीया ।

(पा-२,३.२०; अकि-१,४५३.९-१४; रो-२,७९३-७९४; भा-८/८) येन अवयवेन समुदायः अङ्गी द्योत्यते तस्मिन् भवितव्यम् न च एतेन अवयवेन समुदायः द्योत्यते ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-१/१४) इत्थम्भूतलक्षणे तत्स्थे प्रतिषेधः ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-२/१४) इत्थम्भूतलक्षणे तत्स्थे प्रतिषेधः वक्तव्यः ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-३/१४) अपि भवान्कमण्डलुपाणिम् छात्रम द्राक्षीत् इति ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-४/१४) न वा इत्थम्भूतस्य लक्षणेन अपृथग्भावात् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-५/१४) न वा वक्तव्यम् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-६/१४) किम् कारणम् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-७/१४) इत्थम्भूतस्य लक्षणेन अपृथग्भावात् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-८/१४) यत्र इत्थम्भूतस्य पृथग्भूतम् लक्षणम् तत्र भवितव्यम् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-९/१४) न च अत्र इत्थम्भूतस्य पृथग्भूतम् लक्षणम् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-१०/१४) किम् वक्तव्यम् एतत् ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-११/१४) न हि ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-१२/१४) कथम् अनुच्यमानम् गंस्यते ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-१३/१४) तथा हि अयम् प्राधान्येन लक्षणम् प्रतिनिर्दिशति ।

(पा-२,३.२१; अकि-१,४५३.१६-२३; रो-२,७९४-७९५; भा-१४/१४) इत्थम्भूतस्य लक्षणम् इत्थंभूतलक्षणम् तस्मिन् नित्थंभूतलक्षणे इति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१/३१) सञ्ज्ञः कृत्प्रयोगे षष्ठी विप्रतिषेधेन । सञ्ज्ञः अन्यतरस्याम् कर्मणि इति एतस्मात् कृप्रयोगे षष्ठी भवति विप्रतिषेधेन ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२/३१) सञ्ज्ञः अन्यतरस्याम् इति अस्य अवकाशः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-३/३१) मातरम् सञ्जानीते ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-४/३१) मात्रा सञ्जानीते ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-५/३१) कृत्प्रयोगे षष्ठ्याः अवकाशः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-६/३१) इध्मप्रव्रश्चनः पलाशशातनः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-७/३१) इह उभयम् प्राप्नोति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-८/३१) मातुः सञ्ज्ञाता ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-९/३१) पितुः सञ्ज्ञाता इति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१०/३१) षष्ठी भवति विप्रतिषेधेन ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-११/३१) उपपदविभक्तेः च उपपदविभक्तिः । उपपदविभक्तेः च उपपदविभक्तिः भवति विप्रतिषेधेन । अन्यारादितरेर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते इति अस्य अवकाशः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१२/३१) अन्यः देवदत्तात् ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१३/३१) स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः च इति अस्य अवकाशः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१४/३१) गोषु स्वामी ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१५/३१) गवां स्वामी ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१६/३१) इह उभयम् प्राप्नोति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१७/३१) अन्यः गोषु स्वामी ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१८/३१) अन्यः गवां स्वामी इति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-१९/३१) स्वामीश्वराधिपति इति एतत् भवति विप्रतिषेधेन ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२०/३१) न एषः युक्तः विप्रतिषेधः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२१/३१) न हि अत्र गावः अन्ययुक्ताः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२२/३१) कः तर्हि ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२३/३१) स्वामी ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२४/३१) एवम् तर्हि तुल्यार्थः अतुलोपमाभ्याम् तृतीया अन्यतरस्याम् इति अस्य अवकाशः ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२५/३१) तुल्यः देवदत्तस्य ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२६/३१) तुल्यः देवदत्तेन इति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२७/३१) स्वामीश्वराधिपति इति अस्य वकाशः सः एव ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२८/३१) इह उभयम् प्राप्नोति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-२९/३१) तुल्यः गोभिः स्वामी ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-३०/३१) तुल्यः गवां स्वामी इति ।

(पा-२,३.२२; अकि-१,४५४.२-१६; रो-२,७९६; भा-३१/३१) तुल्यार्थः रतुलोपमाभ्याम् इति एतत् भवति विप्रतिषेधेन ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१/२०) निमित्तकारणहेतुषु सर्वासाम् प्रायदर्शनम् । निमित्तकारणहेतुषु सर्वा विभक्तयः प्रायेण दृश्यन्ते इति वक्तव्यम् ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-२/२०) किम् निमित्तम् वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-३/२०) केन निमित्तेन वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-४/२०) कस्मै निमित्ताय वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-५/२०) कस्मात् निमित्तात् वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-६/२०) कस्य निमित्तस्य वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-७/२०) कस्मिन् निमित्ते वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-८/२०) किम् कारणम् वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-९/२०) केन कारणेन वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१०/२०) कस्मै कारणाय वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-११/२०) कस्मात् कारणात् वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१२/२०) कस्य कारणस्य वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१३/२०) कस्मिन् कारणे वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१४/२०) कः हेतुः वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१५/२०) कम् हेतुम् वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१६/२०) केन हेतुना वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१७/२०) कस्मै हेतवे वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१८/२०) कस्मात् हेतोः वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-१९/२०) कस्य हेतोः वसति ।

(पा-२,३.२३; अकि-१,४५४.१८-४५५.२; रो-२,७९७; भा-२०/२०) कस्मिन् हेतौ वसति ।

---